# शैवशास्त्रेष्वपि

# मांसभक्षणस्याविहितत्वम् ।

इति

# शैवान्बोधयितुं प्रार्थना

शिवभक्तानुचरेण राजानकलक्ष्मणेन
संपादिता ।

सा च

श्रीनगरे राजानकभगवान्दासेन

पं० विश्वनाथ एण्डसन्स पायोनियरनाम्नि मुद्रणालये मुद्रापयित्वा
प्राकाश्यं नीता

काश्मीर—श्रीनगर सं० २००० ।

ॐ

# मांसभक्षणनिषेधः

भो भोः शैवागमनिष्णाताः श्रोतारः! पक्षपातं विहाय वयमधुना मांसभक्षणनिषेधस्य सर्ववादिसिद्धतां द्योतयितुमादौ शैवमतानुसारेण तन्निषेधं साधयामः। यद्यप्याधुनिकाः शैवाः स्वकीयेन कल्पितेन क्षुद्रतर्केण मांसभक्षणमेव सर्वथा साधयन्ति, तथापि तैः खल्वस्मिन्विषयेऽविवेकत एव यत्किंचिज्ज्ञात्वा भोगलौल्यादिनैव मांसभक्षणपक्षो दृढीकृतोऽस्तीत्यतस्तेषां तं पक्षमेवोन्मूलयितुं यथाबुद्धि यथाशास्त्रञ्च किञ्चिद्वयं कथयामः, सावधानतया तत् शृण्वन्तु भवन्तः।

सर्वत्र सर्वप्रकारेण शैवादिशास्त्रेषु मांसभक्षणं निषिद्धमस्ति, परन्तु यज्ञवर्जम्। यज्ञादावेव तद्विहितमस्ति, नान्यत्र। सोऽपि यज्ञो ज्ञानिविषयक एव सर्वत्राम्नातः, यत्र पशुर्मारितः सद्य एव शरीरपातानन्तरमाप्नोति परं पदम्। तस्मादत्रेयं कृपालुना भगवता पशूनामर्थे योजनिकात्मिका दीक्षैवोक्तेत्यवगन्तव्यम्। यदाहुराचार्याभिनवगुप्तपादाः

"तेनैतन्मारणं नोक्तं दीक्षेयं चित्ररूपिणी।
इयं तु योजनैव स्यात्पशोर्देवाय तर्पणे॥"आ० १६, श्लो०६१

इति श्रीषडर्धश्लोकवार्तिके तन्त्रालोके। नेत्रतन्त्रेऽपि—

"एषामनुग्रहार्थाय पशूनां तु वरानने।
मोचयन्ति हि पापेभ्यः पाशौघांश्छेदयन्ति तान्॥
पशूनामुपयुक्तानां नित्यमूर्ध्वगतिर्भवेत्"॥ (२०अ०श्लो०८

इत्याद्युक्तम्। तस्माद्यद्यपि पशोर्मारणं नाम महदप्रियं, तथाप्यस्मिन् ज्ञानिभिर्विहिते महायज्ञे तस्य देहपातादनन्तरमेव

"पशोर्महोपकारोऽयं तदात्वेऽप्यप्रियं भवेत्।
व्याधिच्छेदौषधतपोयोजनात्र निदर्शनम्"।(१६आ०,श्लो०५८

इति श्रीतन्त्रालोकस्थित्या च महोपकारः सञ्जायते, यद्धशास्त्र तत्त्वणमेवापवृज्यते । अज्ञानिना क्रियमाणे तु यज्ञादौ मारितः पशुः प्राणानर्थक एव भवति ; यस्मात्तस्य पशोर्न कोऽपि मुक्तिलक्षणोऽनुग्रहः सेत्स्यति । यदागमः—

"पशवः पतियागार्थमुपयुक्ता न चान्यथा" । ( ने० तं०, २० अ० श्लो० ७ )

इति । अत्र हि, पतियागादावेवोपयुक्तानां पशूनामूर्ध्वगतिर्भवेन्नान्यथेत्यभिप्रायः । पतियज्ञाद्विना तस्मादितस्मान्मांसभक्षणलक्षणात्कुकर्मणः सदा विरमेत् । अमुनैवाशयेन श्रीतन्त्रालोकविवेके श्रीमता जयरथाचार्येणापि—

"यथात्मनि हिंसा न कार्या, तथा परत्रापि नेति स्वपरयोरात्मरूपतयावभासनेन भेदविगलनात् संविद एवाभिव्यक्तिर्भवेत् ।" (तं० वि०, ४ आ०, १०५ पृ०)

इति, तथा

"अलब्धसंविदैकात्म्योऽपि लोको लोभलौल्याभ्यां य-त्सत्कुर्वाणो लोकयात्रामुच्छिन्द्यात् ।" ( तं० वि०, ४ आ०, २७० पृ० )

इति चोक्तम् । एवं लोकयात्रोच्छेदभयादेव ज्ञानसमृद्धस्यावाप्तकामस्यापि सत्कर्मत्यागोऽसत्स्वीकारः सर्वथानर्हः—इत्युक्तं स्वयं भगवता वासुदेवेनापि—

"यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।
स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥
न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किंचन ।
नानवाप्तमवाप्तव्यं प्रवर्तेऽथ च कर्मणि ॥
यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः ।
मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥
उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम् ।
संकरस्य च कर्ता स्यामुपहन्यामिमाः प्रजाः" ॥
( भ० गी०, ३ अ० )

इत्यादिना । अनेनैवाशयेनान्यत्रापि

"बुद्ध्वाद्वैतसतत्त्वस्य यथेष्टाचरणं यदि ।
शुनां तत्त्वदृशां चैव को भेदोऽशुचिभक्षणे ॥
क्व मांसं क्व शिवे भक्तिः क्व मद्यं क्व शिवार्चनम् ।
मद्यादिपूजानिरतैः सुदुष्प्रापो हि शंकरः ॥"

इति, तथा

"अदाम्भिको गुरौ भक्तो ब्रह्मचारी जितेन्द्रियः ।
शिवपूजापरो मौनी मद्यमांसपराङ्मुखः ॥"

(तं० वि प्रमा० २१ आ०, पृ० ६४)

इत्यादि चोक्तम् । तस्माद्धीराणां जगतां—सृष्टिस्थितिसंहारकारिणां महागुरूणामेव यागादौ पश्वालम्भ प्रत्यधिकारोऽस्ति न सर्वेषामित्यवधारणीयम् । तदुक्तं परात्रिंशिकापादटिप्पण्यां २३२ तमे पृष्ठे

"प्रत्यभिज्ञातस्वरूपाणां न विचिकित्सामलोऽवधेयः"

इत्यादि । श्रीतन्त्रालोके

"अथ सर्वाण्युपास्येयं कुलप्रक्रिययोच्यते ।
तथा धाराधिरूढेषु गुरुशिष्येषु योचिता" ॥

(२९ आ०, श्लो०१)

इत्यनेनाचार्याभिनवगुप्तपादैरप्ययमेवावधार्यते । श्रीस्वच्छन्दादिशास्त्रेष्वपि

"मन्त्राः करणभूतास्तु पशुकार्यस्य साधने ।
आचार्यः करणं प्रोक्तः शिवरूपो यतः स्मृतः" ॥

(प० ३, श्लो० १६०)

"एवं व्याप्तिं तु यो वेत्ति परापरविभागतः ।
स भवेन्मोचकः साक्षाच्छिवः परमकारणम् ॥
क्षयं नयत्यसौ पाशान्ददात्येव परं पदम् ।

योजन्या योजने शक्तः शिवशक्तिप्रभावतः" ॥

( नें० तं० । २६ अ० )

इत्यादिनयेन, परकाष्ठाप्राप्तस्य निर्विकल्पकदशाधिरूढस्यैवात्र यागादावधिकारित्वमस्ति— इति प्रतिपादितम् । यत्तु

"अलिपिशितपुरन्ध्रीभोगपर्याकुलोऽहं
बहुविधकुलयोगारम्भसंभावितोऽहम् ।
पशुजनविमुखोऽहं भैरवीसंश्रितोऽहं
गुरुचरणपरोऽहं भैरवोऽहं शिवोऽहम्" ।

इति तथा—

"नित्योदिता पराशक्तिर्यद्यप्येषा तथापि च ।
बाह्यचर्याविहीनस्य दुर्लभा कौलिकीस्थितिः" ॥

इति तथा—

"पेयापेयं स्मृता आपो भक्ष्याभक्ष्यं तु पार्थिवम्" ।

इति तथा—

"शङ्कापि नो विशङ्क्येत निःशङ्कत्वमिदं स्फुटम् ।
वीरव्रतं चाभिनन्देदिति भर्गशिखावचः" ॥

इत्यादि च कौलयागादौ मांसादिभक्षणविधिर्भवादृशां स्वान्ते बाध्यते, सोऽपि तत्त्वज्ञविषय एवास्तीत्यवगन्तव्यम् । तस्मात्

"नन्वादिव्येन देहेन यद्यत्पूजाक्रमं जपम् ।
किञ्चित्कुर्यात्तु तत्तस्य सर्वं भवति निष्फलम् ॥"

( तं० लो० विवे० ,आ० २१ )

इति श्रीतन्त्रलोकनीत्या अदिव्यवपुषा क्रियमाणं यागादि फलदायि न स्यादित्यस्मात्कारणात्साधकेन प्रथमं स्वात्मनि भैरवीभावो भावयितव्यः । यदाहुराचार्याभिनवगुप्तपादाः

"तत्रोक्तमन्त्रतादात्म्या-
द्भैरवात्मत्वमानयेत्" ॥ ( २१ आ० श्लो० २२ )

इति श्रीतन्त्रालोके । महातन्त्रे श्रीमालिनीविजयेऽपि—

"नात्र शुद्धिर्न चाशुद्धिर्न भक्ष्यादिविचारणम् ।
न द्वैतं नापि चाद्वैतं लिङ्गपूजादिकं न च ॥
न चापि तत्परित्यागो निष्परिग्रहतापि वा ।
सपरिग्रहता वापि जटाभस्मादिसंग्रहः ॥
............................................... ।
तत्त्वे निश्चलचित्तस्तु भुञ्जानो विषयानपि ।
न संस्पृश्येत दोषैः स पद्मपत्रमिवाम्भसा ॥
विषापहारिमन्त्रादिसंनद्धो भक्षयन्नपि ।
विषं न मुह्यते तेन तद्वद्योगी महामतिः ॥"

(मा वि० अ० १८)

इत्यनेन श्लोकसन्दर्भेण भगवता एवमेवावधार्यते, यन्महायोगीन्द्राणामेवात्र विहिताविहितकरणेऽधिकारोऽस्तीति । तस्मात्पतियागदन्यत्र मांसाद्याहरणं नाम सर्वेषां नरकपातहेतुतामेवावहतीत्यधिगन्तव्यम् ।

"बिना गुरुं विना देवं मूढवत्परमेश्वरि ।
मद्यमांसाशिनो नित्यं पशवस्ते न संशयः ॥
अयष्ट्वा भैरवं देवमकृत्वा मन्त्रतर्पणम् ।
पशुपानविधौः पीत्वा वीरोऽपि नरकं व्रजेत् ॥"

इत्यागमान्तरोक्तनीत्या पशुवल्लौल्यादिना मांसाद्याहरणेन ज्ञानिनो वीरस्यापि विघ्नभाजनत्वमाम्नातम् । आगमान्तरेऽपि

"न हठेन पशुं हन्यान्नार्तिभावे कदाचन ।
न चोद्देशेन सुभगे यागपूर्वं विधानवित् ।
न विवाहे पशुं हन्यान्न चात्मार्थे कदाचन ।
यागकाले महादेवि नेष्टबन्धुसमागमे ।
क्रीडार्थे न पशुं हन्याद्विना यागाद्वरानने ॥"

इति । अत्रापि 'विधानवित्' इति 'ज्ञानिन एवात्र यागार्थे पश्वालम्भे प्रत्यधिकारः,—इति सूचयति । महायोगीन्द्रः जयरथाचार्योऽपि—

'यागादन्यत्र पुनरियं हिंसैव निषिद्धत्वात्' १६आ०२२पृ०

इति तन्त्रालोकविवेके एवमेव निरूपितवान् । तस्माद्यदि ज्ञानी गुरुर्न प्राप्यते, तदा यज्ञादावपि मांसादिभक्षणं निषिद्धमस्ति का वार्ता पुनर्यथेच्छभोजनादिप्रवृत्तौ? श्रीतन्त्रालोकेऽपि—

"आनन्दकृत्रिमाहारा-
स्तद्वर्जं चक्रयाजकाः ।
द्वयेऽपि निरये यान्ति
रौरवे भीषणे त्विति ॥" (२६ आ० श्लो० ६६)

इत्यादौ, 'येऽपि स्वयं गर्धवशात्त्रीन् मानाहरन्ति-मकारत्रयमुपभुञ्जते, ये च तद्वर्जं भैरवचक्रं (महावीरैरेव यत्पूजनं संपादयितुं शक्यं) पूजयन्ति, ते उभ एव अविहितस्य करणाद्विहितस्याननुष्ठानान्नरके घोरं यातनासहस्राण्यनुभवन्ति'—इत्येवमेव तात्पर्यम् । तस्मात्मांसभक्षणं सर्वथा निषिद्धमेव समस्तीत्यभिदध्मः ।

यः कश्चित्स्वात्मानं स्वात्मयज्ञपरायणम्मन्यमानः मांसभक्षणस्य विधिं ब्रूते, स खल्वात्मानं स्वात्मयज्ञपरायणस्य तैस्तैर्लक्षणैरेव लक्षितं पूर्वं प्रकाशयतु । अन्यथा तादृशविधिस्फोरणेन तस्य स्वात्मप्रतारणालोकसंग्रहाभावरूपस्यानर्थद्वयस्यैवापातः । स्वात्मयज्ञं ये खल्वाचरयन्ति ते तु—

"न चासौ कुरुते पापं नैव पुण्यं च सुव्रते ।
कृतकृत्यः प्रसन्नात्मा कृत्यं चास्य न विद्यते ॥
इहलोके परस्मिंश्च परिपूर्णस्तु सर्वदा ।
धर्माधर्मविनिर्मुक्तः पुण्यपापविवर्जितः ॥
न चास्य भक्ष्याभक्ष्यं हि न पेयापेयमेव च ।

नापवित्रं हि तस्यास्ति न पवित्रं हि सुव्रते ॥
निरपेक्षो ह्यसौ नित्यं सर्वापेक्षाविवर्जितः ।
नास्य क्षेत्रं नास्य तीर्थं नियमो यम एव च ॥
सर्वज्ञः परितृप्तश्च परिपूर्णः स्वभावतः ।
स्वतन्त्रोऽलुप्तसामर्थ्यस्त्वनादिनिधनाश्रितः ॥
जीवन्नेव विमुक्तोऽसौ यस्यैषा भावना सदा ।
शिवो हि भावितो नित्यं न कालः कलयेच्छिवम् ॥
योगी स्वच्छन्दयोगेन स्वच्छन्दगतिचारिणा ।
स स्वच्छन्दपदे युक्तः स्वच्छन्दसमतां व्रजेत् ॥"

इति श्रीस्वच्छन्दादिशास्त्रदृष्ट्या शिवमयाः परमेश्वरस्य परशक्तिपातेन पवित्रीकृता जगतां—सर्गस्थितिसंहारकारिणो लोकोत्तरा एव भवन्ति । न तादृशास्ते, ये जीवकलामेवाधिष्ठिताः । क्वापि ईश्वरपदव्यञ्जकं किमपि चेच्चिह्नमस्ति तर्हि वयं तं स्वात्मयज्ञपरायणं मन्यामहे । तस्मादतादृशेन भोगलौल्यादिनैव पशुवन्मांसभक्षणं क्रियते, नतु स्वात्मयज्ञवेत्तृतया,—परिमितेनापि सुखलवलाभेनान्तःकरणस्य परिम्लानीकृतत्वात् तस्य न तेन कोऽपि लाभः सम्भवति । अन्यदपि,—स्वात्मयज्ञपरायणस्य शिवाभिन्नस्य महामतेरसाधारणमेतल्लोकोत्तरं चिह्नमस्ति, यत्तस्य दृक्पातमात्रेणैव शिष्यः

"दर्शनात्स्पर्शनाद्वापि वितताद्भवसागरात् ।
तारयिष्यन्ति योगीन्द्राः कुलाचारप्रतिष्ठिताः ॥
हेलया क्रीडया वापि आदराद्वाथ तत्त्ववित् ।
यस्य संपातयेद् दृष्टिं स मुक्तस्तत्क्षणात्प्रिये ॥"

इत्याम्नातनीत्या शिवाभिन्नो भवति । अतादृशे एतादृशलक्षणासत्त्वात् स्वात्मयज्ञपरायणताभिमानो दूरापास्त एव । तस्मात्तेन यन्मांसभक्षणं क्रियते कार्यते च, तन्न केवलं तस्यैव नरकपातहेतुरस्ति, अपितु तेषामपि जनानां नरककारणं

भविष्यति ये तदनुयायिनः—लोकाचारस्य तेनैव सर्वतो लुप्तीकृतत्वादिति भावः ।

वेदादौ चापि सौत्रामण्यादावेव सुरापानस्य, विवाहे एव कृते स्मृतौ स्त्रीसम्भोगस्य, एवं यज्ञादावेव प्रवृत्तिपराणामेव मांसादिभक्षणस्य विधिः श्रूयते । अन्यत्र सर्वत्र तन्निषेध आबालगोपेष्वपि प्रसिद्धोऽस्ति । तस्मात्प्रेक्षापूर्वकारिणा प्रबुद्धेन मांसभक्षणात्सर्वतो विरन्तव्येति निखिलागमसिद्धान्तो विशदीकृतोऽस्ति ।

'न हिंस्यात्सर्वभूतानि ।'

इत्यादिश्रुतिभिः सर्वेषां साधारणतो विशेषतो ब्राह्मणानामहिंसारूपो मुख्यो धर्मः प्रतिपाद्यते । मनुरपि—

"योऽहिंसकानि भूतानि हिनस्त्यात्मसुखेच्छया ।
स जीवंश्च मृतश्चैव न क्वचित्सुखमेधते ॥
यो बन्धनवधक्लेशान्प्राणिनां न चिकीर्षति ।
स सर्वस्य हितप्रेप्सुः सुखमत्यन्तमश्नुते ॥
यद्ध्यायति यत्कुरुते धृतिं बध्नाति यत्र च ।
तदवाप्नोत्ययत्नेन यो हिनस्ति न किंचन ॥
नाकृत्वा प्राणिनां हिंसां मांसमुत्पद्यते क्वचित् ।
न च प्राणिवधः स्वर्ग्यस्तस्मान्मांसं विवर्जयेत् ॥
न भक्षयति यो मांसं विधिं हित्वा पिशाचवत् ।
स लोके प्रियतां याति व्याधिभिश्च न पीड्यते ॥
स्वमांसं परमांसेन यो वर्धयितुमिच्छति ।
अनभ्यर्च्य पितॄन्देवांस्ततोऽन्यो नास्त्यपुण्यकृत् ॥
वर्षे वर्षेऽश्वमेधेन यो यजेत शतं समाः ।
मांसानि च न खादेद्यस्तयोः पुण्यफलं समम् ॥
मां स भक्षयितामुत्र यस्य मांसमिहाद्म्यहम् ।
एतन्मांसस्य मांसत्वं प्रवदन्ति मनीषिणः ॥" म० स्मृ० ॥

इत्यादिश्लोकसन्दर्भे मांसभक्षणनिषेधविधायकमेव निरूपितवान् । यागादौ विहितमांसस्यापि परिवर्जनीयत्वं

"समुत्पत्तिं च मांसस्य वधबन्धौ च देहिनाम् ।
प्रसमीक्ष्य निवर्तेत सर्वमांसस्य भक्षणात् ॥" म० स्मृ० ॥

इत्यत्र 'निवर्तेत सर्वमांसस्य भक्षणात्,— इत्यनेनोपदिष्टवान् । तस्मान्मांसभक्षणरूपान्महापापान्निवर्तेत । यत्तु तत्रैव तेन—

"नियुक्तस्तु यथान्यायं यो मांसं नात्ति मानवः ।
स प्रेत्य पशुतामेति संभवानेकविंशतिम् ॥
असंस्कृतान्पशून्मन्त्रैर्नाद्याद्विप्रः कदाचन ।
मन्त्रैस्तु संस्कृतानद्याच्छाश्वतं विधिमास्थितः ॥
यज्ञार्थं पशवः सृष्टाः स्वयमेव स्वयंभुवा ।
यज्ञस्य भूत्यै सर्वस्य तस्माद्यज्ञे वधोऽवधः ॥
ओषध्यः पशवो वृक्षास्तिर्यञ्चः पक्षिणस्तथा ।
यज्ञार्थं निधनं प्राप्ताः प्राप्नुवन्त्युत्सृतीः पुनः ॥"

इत्यादीनि पद्यानि मांसभक्षणविधायकानि निरूपितानि, तान्यपि यज्ञादावेव विहितमांसभक्षणे प्रवृत्तिपराणामेव कृते नियोजनीयानि—इति न किमपि पूर्वापरव्याहतत्वमाशङ्कनीयमिति । यदाहुः—

"न ह्यग्निष्टोमीयहिंसा हिंसैव भवति ।"

इति । याज्ञवल्क्यस्मृतेर्मिताक्षरायां पुलस्त्यकृतव्यवस्थया—

"मुन्यन्नं ब्राह्मणस्योक्तं मांसं क्षत्रियवैश्ययोः ।
मधुप्रदानं शूद्रस्य ........................... ॥"

इत्यादिकया 'ब्राह्मणानां यज्ञश्राद्धादावपि सर्वथा मांसानुपयोग एवातिश्रेयस्कर उक्तः । तस्मात्सर्वप्रकारेण मांसभक्षणस्य पापादपि पापीयस्त्वमेवेत्याशयः ।

मांसभक्षणविधौ शैवादिशास्त्रेष्वन्यशास्त्रेभ्य इयानेव विशेषोऽस्ति, यदत्र ज्ञानिना एव क्रियमाणे यज्ञादौ तद्भक्षणविधि-

रस्ति, न त्वन्ययज्ञादावपि,—इति। अथवा नात्र कश्चिद्वि-
शेषोऽन्यशाक्तेभ्यः;

"विद्वान्यजेत, विद्वांसं याजयेत्"

इत्यादिश्रुतिभिः सर्वत्रैव यज्ञादिकर्मणि ज्ञानिकृत एव साफ-
ल्यस्योक्तत्वात्।

इत्येतादृशी कतिपयविद्वज्जनाश्वासप्रदायिनी शिवशा-
स्त्रसंबन्धिनी स्थितिः कैश्चिन्महापातकिभिराधुनिकैरज्ञानपरा-
भूतैर्जनैः मांसादिभक्षणविधानेन कलंकिता सती लोके तत्तत्
शाक्ते च गर्हणीया इव प्रतिभासते। तस्मात्तानेव वयं
प्रथमं प्रार्थयामः, यत्तैरेतादृशं मांसभक्षणात्मकमनाचारं स्वा-
च्छन्द्यात् कृत्वा शिवशास्त्रादिमयी अनुत्तरा परमा स्थितिर्न
कलंकनीयेति शिवम्।

मांसाद्याहारतो ये वै
मार्गयन्ति परं पदम्।
शिवस्यैव तिरोधान-
शक्त्याघ्राता भवन्ति ते ॥ १ ॥

पतियागमकृत्वैव
ये शैवा मांसभक्षकाः।
अशिवाः ते तु विज्ञेयाः
शैवशास्त्रबहिष्कृताः ॥ २ ॥

अनिष्ट्वा भैरवं देवं
वृथैव मांसभक्षकाः।
ये, ते निमग्नास्तमसि
शैवशास्त्रेष्वपण्डिताः ॥ ३ ॥

शिवभक्त्यमृतास्वादा-
तृणीकृतरसान्तरः ।
राजानलक्ष्मणाभिख्यः
श्रीमन्नारायणात्मजः ॥ ४ ॥

आकाश्यमनयच्चैव-
शास्त्रानुभवसाधितम् ।
मांसाद्यभक्षणविधि-
मविद्यातिमिरापहम् ॥ ५ ॥

इति प्रार्थयति

काश्मीराभ्यन्तरस्थितश्रीनगरान्तर्वर्तिनि—ईश्वरपर्वते
ईश्वराश्रमवास्तव्यः

शिवभक्तानुचरः राजानकलक्ष्मणः

---

केतकी कुसुमसौरभे भृशं
भृङ्ग एव रसिको न मक्षिका ।
भैरवीयपरमाद्वयार्चने
कोऽपि रज्यति महेशचोदितः ॥

